# न्यायसंविद्

## रेखाचित्रीयं निर्वचनम्



लेखकः सम्पादकश्च

**डॉ० विश्वनाथ-धितालः**

नव्यन्यायाचार्यः (लब्धस्वर्णपदकः)

लेखक/प्रकाशक डॉ० विश्वनाथ धिताल

दूरभाषः- +91-9452071687

E-mail:- vdhital@yahoo.com

ISBN : 978-93-5268-563-9



प्रथम संस्करण :- सन् 2017

प्रति :- 500

मूल्य :- ₹ 50.00

टङ्कणकर्ता :- आशीष कुमार बरनवाल

मुद्रक :-
जयभारत प्रिंटिंग प्रेस
सूरजकुण्ड, वाराणसी-221010
ई-मेल : jaibharatprintingpress@gmail.com
मोबाइल : 0542-2411416

# आशीर्वचनम्

डॉ० विश्वनाथधितालविरचितस्य **'न्यायसंविद्'**-ग्रन्थस्य सम्यगवलोकनं विहितम्। ग्रन्थेऽस्मिन् लेखकेन न्यायशास्त्रीयपदार्थानां सरलतया चित्रमाध्यमेन प्रतिपादनं कृतं वर्तते। अतः प्रबन्धोऽयं न्यायशास्त्रे प्रविविक्षूणां महते उपकाराय भविष्यतीति मे विश्वासो वर्तते। एवञ्च एषः लेखकः अनेनैव प्रकारेण शास्त्रसेवायां निरतः सन् यशस्वी चिरञ्जीवी च भवेदिति भगवन्तं प्रार्थये।

**महामहोपाध्यायः प्रो० वशिष्ठत्रिपाठी**
न्यायवैशेषिकविभागध्यक्षचरः
प्रतिकुलपतिचरश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

# निवेदनम्

भारतीयदर्शनपरम्परायां न्यायवैशेषिकदर्शनस्य वैशिष्ट्यं सर्वविदितमेव वर्तते। नव्यन्यायस्य परिष्कारपद्धतिः न केवलं पारम्परिकशास्त्राध्येतॄणामपितु आधुनिकतकनीकिज्ञानां कृतेऽपि उपयोगिनी वर्तते। न्यायशास्त्रे पारिभाषिक-शब्दानां बाहुल्यकारणात् छात्रैः प्रायः काठिन्यमनुभूयते, अतः पारम्परिकाणाम् आधुनिकानाञ्च जिज्ञासूनां सहजतया न्यायशास्त्रीयपदार्थानां बोधार्थम् अयं ग्रन्थः प्रस्तुतो वर्तते। अत्र रेखाचित्रमाध्यमेन विषयाणां प्रतिपादनं विहितं वर्तते तेन पदार्थावगमे सौकर्यं भविष्यतीति मे मतिः।

परमादरणीयैः गुरुवर्यैः प्रो० वशिष्ठत्रिपाठिमहोदयैः समादरणीयाचार्यवर्यैः प्रो० प्रद्योतकुमारमुखोपाध्यायमहोदयैश्च ग्रन्थस्यैतस्य सम्यगवलोकनं विधाय स्वीयाशीर्वचोभिः सभाजितोऽहमात्मानं कृतकृत्यं मन्वानस्तान् प्रणमाञ्जलीन् समर्पयामि।

अन्ते च अस्य ग्रन्थस्य निर्माणे साक्षात्परम्परा वा यैः सहयोगो विहितस्तान् धन्यवादवचोभिः सम्भूष्य ग्रन्थमिमं भगवतो विश्वेश्वरस्य चरणारविन्देषु सादरं समर्पयामि।

विदुषामनुचरः

**विश्वनाथः**

# Foreword

Dr. Vishwanath Dhital is a young but established scholar in the field of Nyaya philosophy including both Nyaya-Vaisesika and Navyanyaya systems of thought. This is amply illustrated by many works he published and many workshops he conducted. Information about his achievements in these regard may be easily available online. He is also well known for his commitment to and regular efforts in popularizing Sanskrit language and also Nyaya thought. His frequently organizes workshops in different places to train scholars who come from widely different backgrounds such as Sanskrit, philosophy, technology or engineering etc. He has also experience of teaching Nyaya as visiting faculty in Institutions like IIT, BHU, Varanasi; Vivekanada University, West Bengal; Sampurnanda Sanskrit University, Varansi; Benares Hindu University, Varanasi and so on. While teaching in University departments or conducting Workshops Dr. Dhital found it a great help to make use of audio-visual aids. For this purpose he prepared diagrams or sort of pictorial presentations of the form and content of Nyaya thought. He draws figures using mainly straight lines whether vertical, horizontal or oblique. Some persons attempted, even before Dr. Dhital, such diagrammatic presentation of Nyaya thought. But none of them can surpass Dr. Dhital's success in respect of comprehensiveness or coverage, depth and authenticity. The present book *Nyayasamvid* is his latest and most mature diagrammatic presentation meant for easy understanding by the neophyte in the field of systematic and technical Nyaya philosophy. He diagrammatically presents here the Nyaya philosophy as it has been presented in verse or prose in Sanskrit in the frequently used primers or source works on which they are based. The arrangement of contents and diagrams as well as coverage of the present work is commendable. This work not only covers the

prameyas but also the pramanas of the Nyayavaisesika school of thought. Dr. Dhital has made great effort to make visible so to say not only many highly technical and formidable notions of Navyanyaya but also the complex inter-relationships among many such notions or terms jointly involved in the definitions of such notions. It is a matter of great satisfaction to note that Dr. Dhital has met with great success in his endeavour.

This is a great and ready to use visual aid for teaching the neophytes in the field of Nyaya philosophy the Navyanyaya logic and epistemology as well as Nyaya-Vaisesika ontology. In future and after actual use of it this work may be ready for further improvements in subsequent editions. It is hoped that many teachers will make full use of this great teaching aid for preparing and publishing which Dr. Visvanath Dhital deserves our appreciation. With minimum help from their teachers serious students will be able to understand much of the technicalities of the great system of thought of Indian philosophy in question easily. And it is not a small achievement.

**P.K Mukhopadhyay**
Formerly Professor of Philosophy
at Jadavpur University and
visiting Professor at Faculty SVDV of BHU

# अनुक्रमणिका


| चित्र सं० | विषयाः |
|---|---|
| १. | चतुर्दश/अष्टादश विद्याः |
| २. | दर्शनम् |
| ३. | प्रवृत्तिकारणानि |
| ४. | न्यायदर्शनम् |
| | वैशेषिकदर्शनम् |
| | न्यायवैशेषिकदर्शनम् |
| | नव्यन्यायः |
| ५. | न्यायस्य महत्त्वम् |
| ६. | सप्त पदार्थाः |
| ७. | द्रव्यम् |
| ८. | गुणाः |
| ९. | गुणानां द्रव्याश्रितत्वम् |
| १०. | गुणानाम् इन्द्रियग्राह्यत्वम् |
| ११. | कर्म |
| १२. | सामान्यम् |
| १३. | विशेषः |
| १४. | समवायः |
| १५. | अभावः |
| १६. | लक्षणपरिचयः |
| १७. | लक्षणदोषाः |
| १८. | सम्बन्धाः/संयोगः |
| १९. | समवायः |
| २०. | स्वरूपसम्बन्धः |
| २१. | तादात्म्यसम्बन्धः |
| २२. | सामानाधिकरण्यसम्बन्धः |
| २३. | विषयविषयिभावसम्बन्धः |
| २४. | स्वस्वामिभावसम्बन्धः |
| २५. | लक्षणसमन्वयपद्धतिः |
| २६. | पाकपरिचयः |
| २७. | संख्या |
| २८. | परिमाणम् |
| २९. | संयोगः |
| ३०. | विभागः |
| ३१. | परत्वापरत्वे |
| ३२. | गुरुत्वम् |
| ३३. | द्रवत्वम् |
| ३४. | स्नेहः |
| ३५. | शब्दः |
| ३६. | बुद्धिः |
| ३७. | संस्कारः |
| ३८. | नित्यानित्यत्वविवेकः |
| ३९. | कारणम् |
| ४०. | अन्यथासिद्धः |
| ४१. | प्रत्यक्षज्ञानम् |
| ४२. | सन्निकर्षः |
| ४३. | संयोगसन्निकर्षः |
| ४४. | संयुक्तसमवायः |
| ४५. | संयुक्तसमवेतसमवायः |
| ४६. | समवायः/समवेतसमवायः |
| ४७. | विशेषणतासन्निकर्षः |
| ४८. | अनुमितिः |
| ४९. | अनुमानम् |
| ५०. | अनुमानम् |
| ५१. | लिङ्गम् |
| ५२. | व्याप्तिः |
| ५३. | पूर्वपक्षव्याप्तिः |
| ५४. | सिद्धान्तव्याप्तिः |
| ५५. | व्यतिरेकव्याप्तिः |
| ५६. | पक्षता |
| ५७. | पक्षता |
| ५८. | हेत्वाभासः |
| ५९. | उपमानम् |
| ६०. | शाब्दबोधः |
| ६१. | लक्षणा |
| ६२. | पदम् |
| ६३. | परिभाषिकशब्दानां प्रयोगः (प्रकारता-विशेष्यता) |
| ६४. | कार्यता-कारणता |
| ६५. | प्रतियोगिता |
| ६६. | परामर्शानुमित्योः कार्यकारणभावः |

# न्यायसंविद्

भारतीयशास्त्रपरम्परायां चतुर्दश अष्टादश वा विद्याः परिगणिताः सन्ति। तासां विभागः रेखाचित्रमाध्यमेन प्रदर्श्यते।




अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश।।

...

अष्टादश विद्याः




आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादश स्मृताः।।

चित्र- २

दृश्यते अनेन इति दर्शनम्

दर्शनम्

- प्राच्यदर्शनम्
- पाश्चात्यदर्शनम्

| वैदिकदर्शनम् | आद्याचार्याः |
| --- | --- |
| सांख्यदर्शनम् | → महर्षिकपिलः |
| योगदर्शनम् | → महर्षिपतञ्जलिः |
| न्यायदर्शनम् | → महर्षिगौतमः |
| वैशेषिकदर्शनम् | → महर्षिकणादः |
| पूर्वमीमांसादर्शनम् | → महर्षिजैमिनिः |
| उत्तरमीमांसादर्शनम् (वेदान्तदर्शनम्) | → महर्षिवेदव्यासः |

| अवैदिकदर्शनम् | आद्याचार्याः |
| --- | --- |
| चार्वाकदर्शनम् | → बृहस्पतिः |
| जैनदर्शनम् | → ऋषभदेवः |
| बौद्धदर्शनम् | → गौतमबुद्धः |

बौद्धदर्शनम् → सौत्रान्तिकम्, वैभाषिकम्, माध्यमिकम्, योगाचारम्

कपिलस्य कणादस्य गौतमस्य पतञ्जलेः व्यासस्य जैमिनेश्चापि दर्शनानि षडेव हि

---

चित्र- ३

प्रवृत्तिकारणानि

इष्टसाधनताज्ञानम्, कृतिसाध्यताज्ञानम्, बलवदनिष्टाननुबन्धित्वज्ञानम्

→ अध्ययनादौ प्रवृत्तिः

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

इष्टसाधनताज्ञानम्, कृतिसाध्यताज्ञानम्, बलवदनिष्टाननुबन्धित्वज्ञानम्

- विषमिश्रितान्नभोजने प्रवृत्तिप्रसङ्गः
- चन्द्रानयनादौ प्रवृत्तिप्रसङ्गः
- जलताडनादौ प्रवृत्तिप्रसङ्गः

चित्र-४

## न्यायदर्शनम्

महर्षिगौतमः

(न्यायसूत्रम् → पञ्च अध्यायाः, प्रति अध्यायम् आह्निकद्वयम्)

- प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः। १/१/१
- दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानाम् उत्तरोत्तरापाये तदनन्तरापायादपवर्गः। १/१/२

षोडश पदार्थाः

प्रमाणम् | प्रमेयः | संशयः | प्रयोजनम् | दृष्टान्तः | सिद्धान्तः

अवयवः | तर्कः | निर्णयः | वादः | जल्पः | वितण्डा

हेत्वाभासः | छलः | जातिः | निग्रहस्थानम्

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

## वैशेषिकदर्शनम्

महर्षिकणादः

(वैशेषिकसूत्रम् → दश अध्यायाः, प्रति अध्यायम् आह्निकद्वयम्)

- यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः। १/१/२
- धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्। १/१/४

महर्षिकणादेन यद्यपि स्वसूत्रे षट् पदार्था एव प्रातिपादिताः, तथापि सूत्रान्तरेषु अभावस्यापि प्रतिपादनेन वैशेषिकदर्शने सप्तपदार्थाः स्वीकृताः सन्ति।

सप्तपदार्थाः

द्रव्यम् | गुणः | कर्म | सामान्यम् | विशेषः | समवायः | अभावः

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

## न्यायवैशेषिकदर्शनम्

उदयनाचार्यप्रभृतयः आचार्याः

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

## नव्यन्यायः

श्रीमान् गङ्गेश-उपाध्यायः

(तत्त्वचिन्तामणिः → प्रत्यक्षखण्डः, अनुमानखण्डः, उपमानखण्डः, शब्दखण्डः)

चित्र-५

## न्यायस्य महत्त्वम्

- प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाभ्यामीक्षितस्याऽन्वीक्षणमन्वीक्षा, तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या, न्यायशास्त्रम्। (वात्स्यायनभाष्यम्)
- प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
  आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता। (वात्स्यायनभाष्यम्)
- नीयते प्राप्यते विवक्षितार्थसिद्धिरनेन स न्यायः। (न्यायवार्तिकतात्पर्यटीका)
- मोहं रुणद्धि विमलीकुरुते च बुद्धिम्
  सूते च संस्कृतपदव्यवहारशक्तिम्।।
  शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
  तर्कश्रमो न कुरुते कमिहोपकारम्।।
- प्रतिज्ञाद्यवयवसमूहो न्यायः। (न्यायवार्तिकतात्पर्यटीका)
- काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्।

---

चित्र-६

## सप्त पदार्थाः

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| द्रव्यम् ९ → | पृथ्वी | जलम् | तेजः | वायुः | आकाशम् | कालः | दिक् | आत्मा | मनः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| गुणः २४ → | रूपम् | रसः | गन्धः | स्पर्शः | संख्या | परिमाणम् | पृथक्त्वम् |
| | संयोगः | विभागः | परत्वम् | अपरत्वम् | गुरुत्वम् | द्रवत्वम् | |
| | स्नेहः | शब्दः | बुद्धिः | सुखम् | दुःखम् | इच्छा | द्वेषः |
| | प्रयत्नः | धर्मः | अधर्मः | संस्कारः | | | |

| | | | | | |
|---|---|---|---|---|---|
| कर्म ५ → | उत्क्षेपणम् | अपक्षेपणम् | आकुञ्चनम् | प्रसारणम् | गमनम् |

| | | |
|---|---|---|
| सामान्यम् २ → | परसामान्यम् | अपरसामान्यम् |

| | |
|---|---|
| विशेषः → | विशेषाः अनन्ताः |

| | |
|---|---|
| समवायः १ → | समवायः एक एव |

| | | | | |
|---|---|---|---|---|
| अभावः ४ → | प्रागभावः | प्रध्वंसाभावः | अत्यन्ताभावः | अन्योन्याभावः |

चित्र-७

## द्रव्यम्

(द्रव्यं सर्वेषां पदार्थानामाश्रयो वर्तते)

पृथिवी, जलम्, तेजः, वायुः

- नित्यम् → परमाणुरूपम्
- अनित्यम् → द्व्यणुकादिब्रह्माण्डान्तम्
  - शरीरम्
  - इन्द्रियम्
  - विषयः

| | शरीरम् | इन्द्रियम् | विषयः |
|---|---|---|---|
| पार्थिवम् → | मनुष्यादीनाम् | घ्राणम् | पाषाणादि |
| जलीयम् → | वरुणलोके | रसना | सरिदादि |
| तैजसम् → | आदित्यलोके | चक्षुः | अग्न्यादि |
| वायवीयम् → | वायुलोके | त्वक् | प्राणादि |

आकाशः, कालः, दिक् → एकम्, नित्यम्, विभु

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

आत्मा

| परमात्मा | जीवात्मा |
|---|---|
| नित्यः | नित्यः |
| विभुः | विभुः |
| एकः | अनेकः |
| नित्यज्ञानवान् | जन्यज्ञानवान् |
| सर्वज्ञः | अल्पज्ञः |

भूतद्रव्यम् - पृथिवी, जलम्, तेजः, वायुः, आकाशम्
मूर्तद्रव्यम् - पृथ्वी, जलम्, तेजः, वायुः, मनः
अमूर्तद्रव्यम् - आकाशम्, कालः, दिक्, आत्मा
विभुद्रव्यम् - आकाशम्, कालः, दिक्, आत्मा
नित्यद्रव्यम् - परमाणुः, आकाशम्, कालः, दिक्, आत्मा, मनः
जन्यद्रव्यम् - कार्यरूपम् → पृथिवी, जलम्, तेजः, वायुः

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

मनः → नित्यम्, परमाणुपरिमाणम्, असंख्यम्

चित्र-८

## गुणाः

(गुणाः समवायसम्बन्धेन द्रव्ये एव तिष्ठन्ति)

**चतुर्विंशतिः गुणाः**

| | | | | | | |
|---|---|---|---|---|---|---|
| रूपम् | रसः | गन्धः | स्पर्शः | संख्या | परिमाणम् | पृथक्त्वम् |
| संयोगः | विभागः | परत्वम् | अपरत्वम् | गुरुत्वम् | द्रवत्वम् | |
| स्नेहः | शब्दः | बुद्धिः | सुखम् | दुःखम् | इच्छा | द्वेषः |
| प्रयत्नः | धर्मः | अधर्मः | संस्कारः | | | |

विशेषगुणाः →

| | | | | | |
|---|---|---|---|---|---|
| रूपम् | रसः | गन्धः | स्पर्शः | | |
| सांसिद्धिकद्रवत्वम् | स्नेहः | शब्दः | बुद्धिः | | |
| सुखम् | दुःखम् | इच्छा | द्वेषः | प्रयत्नः | धर्मः |
| अधर्मः | संस्कारः (भावना) | | | | |

बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः।
अदृष्टभावनाशब्दाः अमी वैशेषिका गुणाः।।

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

सामान्यगुणाः →

| | | | | |
|---|---|---|---|---|
| संख्या | परिमाणम् | पृथक्त्वम् | संयोगः | विभागः |
| परत्वम् | अपरत्वम् | गुरुत्वम् | नैमित्तिकद्रवत्वम् | |
| संस्कारः (स्थितिस्थापकवेगौ) | | | | |

संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा।
गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः।।

चित्र-९

## गुणानां द्रव्याश्रितत्वम्

**वायोर्नवैकादश तेजसो गुणाः जलक्षितिप्राणभृतां चतुर्दश।**
**दिक्कालयोः पञ्च षडेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव च।।**



चित्र-१० गुणानाम् इन्द्रियग्राह्यत्वम्



चित्र-११

## कर्म

[ कर्म (क्रिया) समवायसम्बन्धेन द्रव्ये एव तिष्ठति ]




○ कर्म (क्रिया) पृथिव्यप्तेजोवायुमनस्सु पञ्चद्रव्येषु समवायसम्बन्धेन तिष्ठति।

चित्र-१२

## सामान्यम्

(नित्यमेकमनेकानुगतं सामान्यम्)

| अपरसामान्यम् | परापरसामान्यम् | परापरसामान्यम् | परसामान्यम् |
|---|---|---|---|
| घटत्वम् | पृथिवीत्वम् | द्रव्यत्वम् | सत्ता |
| शुक्लत्वम् | रूपत्वम् | गुणत्वम् | सत्ता |
| उत्क्षेपणत्वम् | कर्मत्वम् | | सत्ता |

○ सामान्यं (जातिः) द्रव्यगुणकर्मसु त्रिषु समवायसम्बन्धेन तिष्ठति।

चित्र-१३

## विशेषः

(नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः)

| | | |
|---|---|---|
| ○ अयं घटः | घटान्तरभिन्नः | भिन्नकपालजन्यत्वात् |
| ○ अयं कपालः | कपालान्तरभिन्नः | भिन्नकपालिकाजन्यत्वात् |
| ○ इयं कपालिका | कपालिकान्तरभिन्ना | भिन्नपिण्डजन्यत्वात् |
| ○ अयं पिण्डः | पिण्डान्तरभिन्नः | भिन्नत्र्यणुकजन्यत्वात् |
| ○ अयं त्रसरेणुः | त्रसरेण्वन्तरभिन्नः | भिन्नद्व्यणुकजन्यत्वात् |
| ○ इदं द्व्यणुकं | द्व्यणुकान्तरभिन्नं | भिन्नपरमाणुजन्यत्वात् |
| ○ अयं परमाणुः | परमाण्वन्तरभिन्नः | विशेषात् |
| ○ अयं विशेषः | विशेषान्तरभिन्नः | विशेषात् (स्वतोव्यावर्तकत्वात्) |

चित्र-१४

## समवायः

(नित्यसम्बन्धः समवायः)

यः समवायसम्बन्धेन क्वचित् तिष्ठति स समवेतः उच्यते।
यस्मिन् समवायसम्बन्धेन कश्चित् तिष्ठति स समवायी उच्यते।




○ अधिकं सम्बन्धप्रकरणे द्रष्टव्यम् (चित्रसंख्या १९)।

---

चित्र-१५




○ प्रागभावः → कार्योत्पत्तेः पूर्वं विद्यमानोऽभावः। अनादिः सान्तः।
भविष्यतीति प्रतीतिविषयः। (इह कपाले घटो भविष्यति)

○ प्रध्वंसाभावः → कार्यनाशकाले विद्यमानोऽभावः। सादिरनन्तः।
नष्टः/ध्वस्तः इति प्रतीतिविषयः। (इह कपाले घटो नष्टः)

○ अत्यन्ताभावः → त्रैकालिकः, अत एव नित्यः।
नास्तीति प्रत्ययवेद्यः। (भूतले घटो नास्ति)

○ अन्योन्याभावः → त्रैकालिकः, नित्यः।
'न' इति प्रत्ययविषयः (घटः पटो न)

चित्र- १६

## लक्षणपरिचयः

- असाधारणधर्मो लक्षणम्।
- तन्मात्रवृत्तिधर्मः असाधारणधर्मः।
- लक्ष्यतावच्छेदकसमनीयतत्वमसाधारणत्वम्।
- समनीयतत्वं च तद्व्याप्यत्वे सति तद्व्यापकत्वम्।
- यथा गन्धवत्त्वं पृथिव्याः लक्षणम्, सास्नावत्त्वं गोः लक्षणम्।




चित्र- १७

## लक्षणदोषाः

| अव्याप्तिः | अतिव्याप्तिः | असम्भवः |
| --- | --- | --- |
| लक्ष्यैकदेशावृत्तित्वम् | लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तित्वम् | लक्ष्यमात्रावृत्तित्वम् |
| नीलरूपवत्त्वं पृथिव्याः लक्षणम् | रूपवत्त्वं पृथिव्याः लक्षणम् | ज्ञानवत्त्वं पृथिव्याः लक्षणम् |

नीलरूपवत्त्वम्
शुक्ला
चित्रा
नीला
कपिशा
पीता
हरिता
रक्ता
पृथिवी

रूपवत्त्वम्
पृथिवी
जलम्
तेजः

ज्ञानवत्त्वम्
पृथिवी
आत्मा

चित्र-१८

सम्बन्धाः

संयोगः

(द्रव्ययोः संयोगः)

| घटः | जलम् | वह्निः | मत्स्यः |
|---|---|---|---|
| ↓ (संयोगः) | ↓ (संयोगः) | ↓ (संयोगः) | ↓ (संयोगः) |
| भूतलम् | घटः | पर्वतः | तडागः |

---

चित्र-१९

समवायः

(अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, नित्यद्रव्यविशेषयोः)

| घटः | पटः | रूपम् | रसः |
|---|---|---|---|
| ↓ (समवायः) | ↓ (समवायः) | ↓ (समवायः) | ↓ (समवायः) |
| कपालौ | तन्तवः | पुष्पम् | फलम् |
| स्पन्दः | गतिः | मनुष्यत्वम् | पृथिवीत्वम् |
| ↓ (समवायः) | ↓ (समवायः) | ↓ (समवायः) | ↓ (समवायः) |
| तृणम् | यानम् | मनुष्यः | पृथिवी |

विशेषः

↓ (समवायः)

परमाणुः (नित्यद्रव्यम्)

---

चित्र-२०

स्वरूपसम्बन्धः

(पदार्थत्वादिरूपोपाधीनाम् अभावस्य च सम्बन्धः स्वरूपसम्बन्धः)

| पदार्थत्वम् | गगनत्वम् | विशेषणता |
|---|---|---|
| ↓ (स्वरूपसम्बन्धः) | ↓ (स्वरूपसम्बन्धः) | ↓ (स्वरूपसम्बन्धः) |
| पदार्थः | गगनम् | विशेषणम् (प्रकारः) |
| रूपाभावः | फलभेदः | सुखाभावः |
| ↓ (स्वरूपसम्बन्धः) | ↓ (स्वरूपसम्बन्धः) | ↓ (स्वरूपसम्बन्धः) |
| वायुः | पुष्पम् | शरीरम् |

चित्र- २१

**तादात्म्यसम्बन्धः (अभेदसम्बन्धः)**

(स्वस्मिन् स्वस्य सम्बन्धः)

पुस्तकम्
↓ (तादात्म्यसम्बन्धः)
पुस्तकम्

पुष्पम्
↓ (तादात्म्यसम्बन्धः)
पुष्पम्

फलम्
↓ (तादात्म्यसम्बन्धः)
फलम्

---

चित्र- २२

**सामानाधिकरण्यसम्बन्धः**

धूमः — संयोगः — पर्वतः — संयोगः — वह्निः

पर्वतः
(एकाधिकरणम्)

ज्ञानम् — समवायः — आत्मा — समवायः — सुखम्

आत्मा
(एकाधिकरणम्)

धूमसमानाधिकरणः वह्निः
वह्निसमानाधिकरणः धूमः

धूमसामानाधिकरण्यं वह्नौ
वह्निसामानाधिकरण्यं धूमे

ज्ञानसमानाधिकरणं सुखम्
सुखसमानाधिकरणं ज्ञानम्

ज्ञानसामानाधिकरण्यं सुखे
सुखसामानाधिकरण्यं ज्ञाने

---

चित्र- २३

**विषयतासम्बन्धः**

(ज्ञानं विषयतासम्बन्धेन विषये तिष्ठति)

घटविषयकं ज्ञानम्
↓ (विषयतासम्बन्धः)
घटः

फलविषयकं ज्ञानम्
↓ (विषयतासम्बन्धः)
फलम्

पुष्पविषयकं ज्ञानम्
↓ (विषयतासम्बन्धः)
पुष्पम्

. . . . . . . . . . . . . . . . . . . .

**विषयितासम्बन्धः**

(विषयः विषयितासम्बन्धेन ज्ञाने तिष्ठति)

घटः
↓ (विषयितासम्बन्धः)
घटविषयकं ज्ञानम्

फलम्
↓ (विषयितासम्बन्धः)
फलविषयकं ज्ञानम्

पुष्पम्
↓ (विषयितासम्बन्धः)
पुष्पविषयकं ज्ञानम्

चित्र- २४

**स्वामित्वसम्बन्धः**

स्वं (धनं) स्वामित्वसम्बन्धेन स्वामिनि तिष्ठति

धनम् → (स्वामित्वसम्बन्धः) → यज्ञदत्तः

पुरुषः → (स्वामित्वसम्बन्धः) → राजा

**स्वत्वसम्बन्धः**

स्वामी स्वत्वसम्बन्धेन स्वे (धने) तिष्ठति

यज्ञदत्तः → (स्वत्वसम्बन्धः) → धनम्

राजा → (स्वत्वसम्बन्धः) → पुरुषः

चित्र- २५

लक्षणसमन्वयपद्धतिः

अधीतव्याकरणकाव्यकोषत्वे सति अनधीतन्यायशास्त्रत्वं बालकस्य लक्षणम्

अधीतव्याकरणकाव्यकोषत्वम् (विशेषणदलम्) → व्यासकालिदासादयः

अनधीतन्यायशास्त्रत्वम् (विशेष्यदलम्) → स्तनन्धयशिशुः

बालकः (लक्ष्यः)

- व्यासादौ अतिव्याप्तिवारणाय विशेष्यदलम्।
- स्तनन्धये अतिव्याप्तिवारणाय विशेषणदलम्।

गुणकर्मभिन्नत्वे सति सत्तावत्त्वं द्रव्यस्य लक्षणम्

गुणकर्मभिन्नत्वम् (विशेषणदलम्) → सामान्यादि

सत्तावत्त्वम् (विशेष्यदलम्) → द्रव्यादि

द्रव्यम् (लक्ष्यम्)

- सामान्यादावतिव्याप्तिवारणाय विशेष्यम्।
- द्रव्यादावतिव्याप्तिवारणाय विशेषणम्।

द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वं गुणस्य लक्षणम्

द्रव्यकर्मभिन्नत्वम् (विशेषणदलम्) → सामान्यादि

सामान्यवत्त्वम् (विशेष्यदलम्) → द्रव्यादि

गुणः

---

(चित्र- २६) **पाकपरिचयः**

रूपादिचतुष्टयं पृथिव्यादिचतुर्षु तिष्ठति, तत्रापि पृथिव्यां चत्वारोऽपि गुणाः सन्ति।




- पाको नाम विजातीयतेजःसंयोगः।
- येन तेजःसंयोगेन रूपादिचतुर्णां परिवर्तनं जायते स एव तेजःसंयोगः 'पाकः' इति कथ्यते।
- अर्थात् पाकेन रूपरसगन्धस्पर्शानां परिवर्तनं जायते।
- पाकेन विद्यमानानां रूपरसगन्धस्पर्शानां विनाशः, नवीनानां रूपरसगन्धस्पर्शानां प्रादुर्भावो भवति।

पाकात् पूर्वम् ↓



रूपम् - हरितम्
रसः - अम्लः
गन्धः - सामान्यसुगन्धः
स्पर्शः - कठिनः

पाकानन्तरम् ↓



रूपम् - पीतम्
रसः - मधुरः
गन्धः - सुगन्धः (विशेषः)
स्पर्शः - मृदुः

- पृथिव्यां वर्तमानाः रूपादयोऽनित्याः एव।
- जलादिषु वर्तमानाः रूपादयो नित्या अनित्याः च। नित्येषु (परमाणुषु) वर्तमाना रूपादयो नित्याः। अनित्येषु (कार्यरूपेषु) वर्तमाना रूपादयोऽनित्याः।

चित्र- २७

**संख्या**

- नवद्रव्येषु वर्तते।
- एकत्वादि परार्धपर्यन्ता।
- एकत्वं नित्यमनित्यं च नित्यगतं नित्यम्, अनित्यगतमनित्यम्।
- द्वित्वादिकं सर्वम् अनित्यम् एव।

एकं दश शतं चैव सहस्रमयुतं तथा
लक्ष्यं च नियुतं चैव कोटिरर्बुदमेव च।
वृन्दं खर्वो निखर्वश्च सङ्खः पद्मश्च सागरः
अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्।।

| | | |
|---|---|---|
| एकम् | → | १ |
| दश | → | १० |
| शतम् | → | १०० |
| सहस्रम् | → | १००० |
| अयुतम् | → | १०००० |
| लक्ष्यम् | → | १००००० |
| नियुतम् | → | १०००००० |
| कोटिः | → | १००००००० |
| अर्बुदम् | → | १०००००००० |
| वृन्दम् | → | १००००००००० |
| खर्वः | → | १०००००००००c |
| निखर्वः | → | १००००००००००० |
| सङ्खः | → | १०००००००००००० |
| पद्मः | → | १००००००००००००० |
| सागरः | → | १०००००००००००००० |
| अन्त्यम् | → | १००००००००००००००० |
| मध्यम् | → | १०००००००००००००००० |
| परार्धम् | → | १००००००००००००००००० |




* परमपरिमाणं नित्यम्, तदाश्रयोऽपि नित्यः।

* मध्यमपरिमाणम् अनित्यम्, तदाश्रयोऽपि अनित्यः।

---

पृथक्त्वं संख्यावत् (द्रष्टव्यम्, चित्रसंख्या २७)

---




---



चित्र- ३१




चित्र- ३२

गुरुत्वम्

(आद्यपतनाऽसमवायिकारणं गुरुत्वम्)

(वृक्षात् फलं पतति)




चित्र- ३३

द्रवत्वम्

(आद्यस्यन्दनासमवायिकारणं द्रवत्वम्)

(जलं प्रवहति)




चित्र- ३४

स्नेहः

पिण्डीभावहेतुः, जलमात्रवृत्तिः

- कार्यम् → पिण्डीभावः (चूर्णादेः धारणाकर्षणहेतुभूतः संयोगविशेषः)
- समवायिकारणम् → चूर्णम्
- असमवायिकारणम् → चूर्णे जायमाना क्रिया
- निमित्तकारणम् → जले विद्यमानः स्नेहः।

चित्र-३५    **शब्दः (आकाशविशेषगुणः)**

(क)




(ख)




- हस्तमृदङ्गसंयोगात् जायमानः शब्दः संयोगजः।
- वस्त्रे तन्तुविभागात् जायमानः शब्दः विभागजः।
- प्राथमिकः शब्दः संयोगजो विभागजो वा भवति।
- शब्दः वीचीतरङ्गन्यायेन शब्दान्तरं जनयति, सोऽपि शब्दान्तरं जनयतीति क्रमेण शब्दधाराः जायन्ते, तत्र सर्वेऽपि उत्तरोत्तरशब्दाः शब्दजाः।

---

चित्र-३६    **बुद्धिः (आत्मविशेषगुणः)**




---

सुखम्, दुःखम्, इच्छा, द्वेषः, प्रयत्नः, धर्मः, अधर्मः चैते गुणाः आत्मन्येव तिष्ठन्ति।

---

चित्र-३७



चित्र- ३८

## नित्याऽनित्यत्वविवेकः

○ द्रव्याणि → पृथिव्यादिचतुष्टयस्य परमाणवः आकाशः, कालः, दिक्, आत्मा, मनः च नित्यद्रव्याणि। कार्यरूपं पृथिव्यादिचतुष्टयमनित्यम्।

○ गुणाः-

रूपम् → जलपरमाणौ तेजःपरमाणौ च विद्यमानं रूपं नित्यम्, अन्यदनित्यम्।

रसः → जलपरमाणौ विद्यमानो रसः नित्यः, अन्योऽनित्यः।

गन्धः → सर्वोऽप्यनित्यः।

स्पर्शः → जलतेजोवायुपरमाणुषु विद्यमानः स्पर्शः नित्यः। अन्योऽनित्यः।

संख्या → नित्यद्रव्यवृत्ति एकत्वं नित्यम्। अन्या सर्वाऽपि संख्या अनित्या

परिमाणम् → नित्यगतं नित्यम् (परमपरिमाणं नित्यम्)। अन्यदनित्यम्।

पृथक्त्वम् → नित्यद्रव्यवृत्ति एकपृथक्त्वं नित्यम् अन्यदनित्यम् (संख्यावत्)।

संयोगः → संयोगमात्रमनित्यम् (विभुद्वयसंयोगो नित्यः केषाञ्चिन्मते)।

विभागः → विभागमात्रमनित्यम्।

परत्वाऽपरत्वे → अनित्ये।

गुरुत्वम् → पृथिवीपरमाणौ जलपरमाणौ च विद्यमानं नित्यम्। अन्यदनित्यम् ।

द्रवत्वम् → जलपरमाणुवृत्ति द्रवत्वं नित्यम्। अन्यदनित्यम् ।

स्नेहः → जलपरमाणुवृत्तिः स्नेहो नित्यः अन्योऽनित्यः।

शब्दः → अनित्यः।

बुद्धीच्छाप्रयत्नाः → नित्याः ईश्वरस्य, जीवस्याऽनित्याः।

सुखदुःखद्वेषधर्माऽधर्माः → अनित्याः

वेगभावने → अनित्ये

स्थितिस्थापकः → पृथिवीपरमाणुवृत्तिः नित्यः अन्योऽनित्यः।

○ कर्म → कर्म सर्वमपि अनित्यम्।

○ सामान्यविशेषसमवायाः → नित्याः

○ अभावः → अत्यन्ताभावान्योन्याभावौ नित्यौ, प्रागभावप्रध्वंसाभावौ अनित्यौ

चित्र-३९

## कारणम्

**अन्यथासिद्धिशून्यं कार्यपूर्ववृत्ति कारणम्**

**(१) समवायिकारणम्** | **(२) असमवायिकारणम्** | **(३) निमित्तकारणम्**

(१) यस्मिन् समवायसम्बन्धेन कार्यमुत्पद्यते तत् समवायिकारणम्।

**घटः (कार्यम्)**
**समवायः ↓**
**कपालौ (समवायिकारणम्)**

**पटः**
**समवायः ↓**
**तन्तवः**

**द्व्यणुकम्**
**समवायः ↓**
**परमाणू**

२(क) कार्यसमवायिकारणे समवायसम्बन्धेन वर्तमानं कारणम् असमवायिकारणम्।

**घटः (कार्यः)** — **(कारणम्)** → **कपालसंयोगः**
**समवायः**
**(समवायिकारणम्) कपालः**

**पटः** — **(कारणम्)** → **तन्तुसंयोगः**
**तन्तुः**

२ (ख) कार्यसमवायिकारणस्य समवायिकारणे समवायसम्बन्धेन वर्तमानं सत् कारणम् असमवायिकारणम्।




**निमित्तकारणम्**

**साधारणनिमित्तकारणम्**
↓
**(कालेश्वरादयः)**

**असाधारणनिमित्तकारणम्**
↓
**(दण्डकपालादयः)**

○ समवायि-असमवायिकारणे असाधारणकारणे एव भवतः।

चित्र-४० अन्यथासिद्धः

लघुनियतपूर्ववर्तिभिन्नः अन्यथासिद्धः




तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारस्य लक्षणम्।

घटः (कार्यम्)

भ्रमिक्रिया (व्यापारः)

दण्डः (करणम्)




चित्र-४१




○ इन्द्रिय-अर्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्।



चित्र-४२

## सन्निकर्षः

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः।

संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्च (विशेषणता)




चित्र-४३

○ द्रव्यप्रत्यक्षे संयोगः सन्निकर्षः

○ इन्द्रियस्य विषयेण सह सन्निकर्षो जायते ततः प्रत्यक्षज्ञानमुत्पद्यते।

## संयोगः







विषयतासम्बन्धेन पुष्पचाक्षुषप्रत्यक्षं प्रति संयोगसम्बन्धेन चक्षुः कारणम्

**चित्र-४४** द्रव्यसमवेतप्रत्यक्षे संयुक्तसमवायः सन्निकर्षः।

| (करणम्) | (सन्निकर्षः) | (सन्निकृष्टपदार्थः) | (फलम्) |
|---|---|---|---|
| चक्षुः | संयुक्तसमवायः / पुष्पम् | पुष्परूपम् (पुष्पत्वम्) → | पुष्परूपचाक्षुषप्रत्यक्षम्<br>पुष्पत्वचाक्षुषप्रत्यक्षम् |
| त्वक् | संयुक्तसमवायः / पुष्पम् | पुष्पस्पर्शः (पुष्पत्वम्) → | पुष्पस्पर्शत्वाचप्रत्यक्षम्<br>पुष्पत्वत्वाचप्रत्यक्षम् |
| मनः | संयुक्तसमवायः / आत्मा | सुखम् (आत्मत्वम्) → | सुखमानसप्रत्यक्षम्<br>आत्मत्वमानसप्रत्यक्षम् |
| घ्राणम् | संयुक्तसमवायः / पृथिवी | गन्धः → | गन्धघ्राणजप्रत्यक्षम् |
| रसना | संयुक्तसमवायः / पृथिवी | रसः → | रसरासनप्रत्यक्षम् |

---

**चित्र-४५** द्रव्यसमवेतसमवेतप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः

| | | | |
|---|---|---|---|
| चक्षुः | संयुक्तसमवेतसमवायः / पुष्पम्, रूपम् | रूपत्वम् → | रूपत्वचाक्षुषप्रत्यक्षम् |
| त्वक् | संयुक्तसमवेतसमवायः / जलम्, शीतस्पर्शः | स्पर्शत्वम् → | स्पर्शत्वस्पार्शनप्रत्यक्षम् |
| मनः | संयुक्तसमवेतसमवायः / आत्मा, सुखम् | सुखत्वम् → | सुखत्वमानसप्रत्यक्षम् |
| घ्राणम् | संयुक्तसमवेतसमवायः / पृथ्वी, गन्धः | गन्धत्वम् → | गन्धत्वघ्राणजप्रत्यक्षम् |
| रसना | संयुक्तसमवेतसमवायः / पृथ्वी, रसः | रसत्वम् → | रसत्वरासनप्रत्यक्षम् |

**चित्र-४६**

**शब्दप्रत्यक्षे समवायः सन्निकर्षः**
**शब्दसमवेतप्रत्यक्षे समवेतसमवायः सन्निकर्षः**

(करणम्)  (सन्निकर्षः)  (सन्निकृष्टपदार्थः)  (फलम्) 

श्रोत्रम् —— समवायः ——  शब्दः ⟶ शब्दश्रावणप्रत्यक्षम्

श्रोत्रम् —— समवेतसमवायः / शब्दः ——  शब्दत्वम् ⟶ शब्दत्वश्रावणप्रत्यक्षम्

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

**चित्र-४७**

**अभावप्रत्यक्षे विशेषणतासन्निकर्षः**

वायौ रूपाभावस्य चाक्षुषप्रत्यक्षम् (रूपाभाववान् वायुः इति)

(अत्र वायुः विशेष्यः, रूपाभावः विशेषणम्)

चक्षुः —— संयुक्तविशेषणता / वायुः ——  रूपाभावः ⟶ रूपाभावचाक्षुषप्रत्यक्षम्

○ चक्षुषा घटत्वे रूपाभावस्य प्रत्यक्षम् (रूपाभाववद् घटत्वमिति)

चक्षुः —— संयुक्तसमवेतविशेषणता / (घटः, घटत्वम्) ——  रूपाभावः ⟶ रूपाभावचाक्षुषप्रत्यक्षम्

○ चक्षुषा रूपत्वे रूपाभावस्य प्रत्यक्षम् (रूपाभाववद् रूपत्वमिति)

चक्षुः —— संयुक्तसमवेतसमवेतविशेषणता / (घटः, रूपम्, रूपत्वम्) ——  रूपाभावः ⟶ रूपाभावचाक्षुषप्रत्यक्षम्

○ त्वचा जले उष्णस्पर्शाभावस्य प्रत्यक्षम् (उष्णस्पर्शाभाववज्जलमिति)

त्वक् —— संयुक्तविशेषणता / जलम् ——  उष्णस्पर्शाभावः ⟶ उष्णस्पर्शाभावत्वाचप्रत्यक्षम्

○ मनसि आत्मनि दुःखाभावस्य प्रत्यक्षम् (दुःखा भाववान् अहमिति)

मनः —— संयुक्तविशेषणता / आत्मा ——  दुःखाभावः ⟶ दुःखाभावमानसप्रत्यक्षम्

चित्र-४८

## अनुमितिः

पर्वतो वह्निमान् धूमात् यथा महानसम्।

पक्षः = पर्वतः, साध्यः = वह्निः, हेतुः = धूमः, दृष्टान्तः = महानसम्।

- सामानाधिकरण्यनियमो व्याप्तिः।
- व्याप्तेराश्रयः व्याप्यः।
- व्याप्ये यस्य व्याप्तिः स व्यापकः।




- यत्र यत्र धूमः तत्र तत्र वह्निः → भूयोदर्शनम् ← यत्र यत्र हेतुः तत्र तत्र साध्यम्
- वह्निव्याप्यो धूमः → व्याप्तेरनुभवः ← साध्यव्याप्यो हेतुः
- धूमवान् पर्वतः → पक्षधर्मताज्ञानम् ← हेतुमान् पक्षः
- वह्निव्याप्यो धूमः → व्याप्तिस्मरणम् ← साध्यव्याप्यो हेतुः
- वह्निव्याप्यधूमवान् पर्वतः → परामर्शः ← साध्यव्याप्यहेतुमान् पक्षः
- पर्वतो वह्निमान् → अनुमितिः ← पक्षः साध्यवान्

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •




व्याप्तिज्ञानम् = करणम्
परामर्शः = व्यापारः
अनुमितिः = फलम्

चित्र-४९

## अनुमानम्

### अनुमितिकरणं अनुमानम्

(व्यापारजनकं सत् असाधारणं कारणं करणम्)




- अनुमितिकरणत्वात् व्याप्तिज्ञानम् अनुमानम्।

---

चित्र-५०




- पञ्चावयववाक्यसमुदायो न्यायः, तदेव परार्थानुमानम्
- पञ्चावयवाः → प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनम्
- प्रत्येकमवयवः, समुदायो न्यायः

| | | |
|---|---|---|
| पर्वतो वह्निमान् | - | प्रतिज्ञा |
| धूमवत्त्वात् | - | हेतुः |
| यो यो धूमवान् स स वह्निमान् यथा महानसम् | - | उदाहरणम् |
| तथा चायम् (वह्निव्याप्यधूमवान् पर्वतः) | - | उपनयः |
| तस्मात् तथा (वह्निव्याप्यधूमवत्त्वात् वह्निमान्) | - | निगमनम् |

चित्र-५१

## लिङ्गम्

व्याप्तिबलेन लीनम् अर्थं गमयति बोधयतीति लिङ्गम् (धूमादि)




→ अन्वयसहचारेण गृह्यमाणा व्याप्तिः अन्वयव्याप्तिः

→ व्यतिरेकसहचारेण गृह्यमाणा व्याप्तिः व्यतिरेकव्याप्तिः।

(यत्र यत्र हेतुः तत्र तत्र साध्यमिति अन्वयसहचारः)
(यत्र यत्र साध्याभावः तत्र तत्र हेत्वभावः इति व्यतिरेकसहचारः)

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

○ अन्वयव्यतिरेकि

पर्वतो वह्निमान् धूमात्

यत्र यत्र धूमः तत्र तत्र वह्निः, यथा महानसम्

यत्र यत्र वह्न्यभावः तत्र तत्र धूमाभावः यथा जलह्रदः

○ केवलान्वयि

घटः अभिधेयः प्रमेयत्वात्

यत्र यत्र प्रमेयत्वं तत्र तत्र अभिधेयत्वम्, यथा पटः

यत्र यत्र अभिधेयत्वाभावः तत्र तत्र प्रमेयत्वाभावः ✕

○ केवलव्यतिरेकि

पृथिवी इतरभेदवती गन्धात्

यत्र यत्र गन्धः तत्र तत्र इतरभेदः ✕

(अत्र पृथिवी पक्षः अतो न दृष्टान्तः)

यत्र यत्र इतरभेदाभावः तत्र तत्र गन्धाभावः, यथा जलम्

चित्र-५२




---

चित्र-५३ पूर्वपक्षव्याप्तिः → साध्याभाववदवृत्तित्वम्

○ साध्याभावाधिकरणनिरूपितवृत्तित्वाभावः।




○ सद्धेतौ लक्षणगमनाल्लक्षणसमन्वयः।

---




○ असद्धेतौ लक्षणाऽगमनाद् अतिव्याप्तिदोषो नास्ति।

चित्र-५४ सिद्धान्तव्याप्तिः → हेतुव्यापकसाध्यसामानाधिकरण्यम्।

○ हेत्वधिकरणवृत्त्यभावाप्रतियोगिसाध्यसामानाधिकरण्यम्।

पर्वतो वह्निमान् धूमात्




सामानाधिकरण्यं धूमे

पर्वतो धूमवान् वह्नेः




प्रतियोगी = धूमः (साध्यः)

अप्रतियोगि साध्यं नास्ति

---

चित्र-५५ व्यतिरेकव्याप्तिः → साध्याभावव्यापकीभूताभावप्रतियोगित्वम्।

पर्वतो वह्निमान् धूमात्




पर्वतो धूमवान् वह्नेः



चित्र-५६

## पक्षता

### सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता

### (विशिष्टाभावस्त्रिविधः)

- विशेषणाभावप्रयुक्तः विशिष्टाभावः।
- विशेष्याभावप्रयुक्तः विशिष्टाभावः।
- उभयाभावप्रयुक्तः विशिष्टाभावः।

..............................

### उदाहरणम् १

#### फलविशिष्टवृक्षाभावः

(फलविशिष्टवृक्षः - अभावः) (विशिष्टाभावः)

विशेषणम् = फलम्  विशेष्यः = वृक्षः

| फलम् | वृक्षः | विशेषणम् | विशेष्य | |
|---|---|---|---|---|
| नास्ति | अस्ति | नास्ति | अस्ति | →विशेषणाभावप्रयुक्तः ० |
| अस्ति | नास्ति | अस्ति | नास्ति | →विशेष्याभावप्रयुक्तः ० |
| नास्ति | नास्ति | नास्ति | नास्ति | →उभयाभावप्रयुक्तः ० |
| अस्ति | अस्ति | अस्ति | अस्ति | →विशिष्टाभावो नास्ति |

### उदाहरणम् २

- दाहं प्रति उत्तेजकाभावविशिष्टमण्यभावः कारणम्।
- उत्तेजकाभावविशिष्टमणिः - अभावः = विशिष्टाभावः।

विशेषणम् = उत्तेजकाभावः  विशेष्यः = मणिः

उत्तेजकः = सूर्यकान्तमणिः  मणिः = चन्द्रकान्तमणिः

| सूर्यकान्तमणिः | चन्द्रकान्तमणिः | विशेषणम् | विशेष्यम् | विशिष्टाभावः |
|---|---|---|---|---|
| ✓ | ✓ | × | ✓ | ✓ |
| × | × | ✓ | × | ✓ |
| ✓ | × | × | × | ✓ |
| × | ✓ | ✓ | ✓ | × |

चित्र-५७

## पक्षता

- सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता।
- सिषाधयिषाविरहविशिष्टसिद्धिः - अभावः = विशिष्टाभावः

विशेषणम् = सिषाधयिषाविरहः

विशेष्या = सिद्धिः

सिषाधयिषा = अनुमित्सा (उत्तेजिका)

सिद्धिः = साध्य(वत्ता)निश्चयः (प्रतिबन्धिका)

| सिषाधयिषा | सिद्धिः | विशेषणम् | विशेष्या | विशिष्टाभावः |
|---|---|---|---|---|
| ✓ | × | ? | ? | ? |
| × | ✓ | ? | ? | ? |
| ✓ | ✓ | ? | ? | ? |
| × | × | ? | ? | ? |

.......................................

### अभ्यासः

* धनाभावविशिष्टपुरुषाभावः
* फलाभावविशिष्टवृक्षाभावः
* पुस्तकाभावविशिष्टच्छात्राभावः

विशेषणम् ?

विशेष्यः ?

| धनम् | पुरुषः | विशेषणम् | विशेष्यः | विशिष्टाभावः |
|---|---|---|---|---|
| | | | | |
| | | | | |
| | | | | |
| | | | | |

चित्र-५८

## हेत्वाभासः

- हेतुवद् आभासन्ते इति हेत्वाभासाः (दुष्टहेतवः)।
- हेतोराभासा इति हेत्वाभासाः (हेतुदोषाः)।
- सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः पञ्च दुष्टहेतवः।
- व्यभिचार-विरोध-सत्प्रतिपक्ष-असिद्धि-बाधाः पञ्च हेतुदोषाः।

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

- यो हेतुः साध्याभावस्य अधिकरणे तिष्ठति सः हेतु सव्यभिचारः (व्यभिचारी)।




. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

- यो हेतुः साध्याभावस्य व्याप्यो भवति स विरुद्धः




. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

- यो हेतुः पक्षे न तिष्ठति सः असिद्धः (स्वरूपासिद्धः)।
- यस्य हेतोः साध्यं पक्षे न तिष्ठति स बाधितः।

* ह्रदो द्रव्यं धूमात्।

* ह्रदो वह्निमान् द्रव्यत्वात्।




धूमः = असिद्धः
द्रव्यत्वम् = बाधितम्

हेत्वाभासः

○ यत्र द्वाभ्यां हेतुभ्यां परस्परं विरुद्धौ साध्यौ साध्येते तौ सत्प्रतिपक्षौ।

○ शब्दः नित्यः श्रावणत्वात्, शब्दत्ववत्।

○ शब्दः अनित्यः कार्यत्वात्, घटवत्।

| पक्षः | प्रतिपक्षः |
|---|---|
| पक्षः- शब्दः | पक्षः- शब्दः |
| साध्यम् - अनित्यत्वम् | साध्यम् - नित्यत्वम् |
| हेतुः - कार्यत्वम् | हेतुः - श्रावणत्वम् |
| दृष्टान्तः - घटः | दृष्टान्तः - शब्दत्वम् |

○ नित्यत्वव्याप्यश्रावणत्ववान् शब्दः इति परामर्शः।

○ अनित्यत्वव्याप्यकार्यत्ववान् शब्दः इति परामर्शः।

---

उपमानम्

चित्र-५९

**उपमितिकरणमुपमानम्**

○ संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः

○ अतिदेशवाक्यार्थस्मरणं व्यापारः

○ सादृश्यज्ञानं करणम्

→ गोसदृशो गवयपदवाच्यः इति अतिदेशवाक्यार्थज्ञानम्

→ गोसदृशं पिण्डं दृष्ट्वा **गोसदृशोऽयम्** इति सादृश्यज्ञानम्

→ 'गोसदृशो गवयपदवाच्यः' इति वाक्यार्थस्मरणम्।

→ अयं गवयपदवाच्यः इति उपमितिः।

चित्र-६० 

## शाब्दबोधः

१. पदज्ञानम् २. पदार्थोपस्थितिः ३. परस्परसंसर्गावगाही बोधः।

**बालकः ग्रामं गच्छति।**

१. बालक, सु, ग्राम, अम्, गम्, ति ← पदज्ञानम्।

२. बालकः एकत्वम् ग्रामः कर्मता गमनम् कृतिः (बालकः) ←(पदार्थोपस्थितिः)

आश्रयता निष्ठत्वम् निरुपकत्वम् अनुकूलत्वम् आश्रयता

३. ग्रामनिष्ठकर्मतानिरूपकगमनानुकूलकृत्याश्रयः एकत्वाश्रयः बालकः

(शाब्दबोधः, अन्वयबोधः, परस्परसंसर्गावगाही बोधः)

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .



○ शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।

चित्र-६१




○ आकाङ्क्षा, योग्यता, सन्निधिश्च शब्दबोधे कारणम्।

---

चित्र-६२




○ समुदायशक्त्या अर्थबोधकं पदं रूढम्।

○ लक्षणावृत्या अर्थबोधकं पदं लक्षकम् /लाक्षणिकम्।

○ अवयवशक्त्या अर्थबोधकं पदं यौगिकम्।

○ समुदायशक्त्या अवयवशक्त्या चैकार्थबोधकं पदं योगरूढम्।

→ (समुदायशक्त्या अवयवशक्त्या च भिन्नार्थबोधकं पदं रूढयौगिकमित्यपि वदन्ति।)

○ रूढं च लक्षकं चैव योगरूढं च यौगिकम्।
तच्चतुर्धा परै रूढयौगिकं मन्यतेऽधिकम्।।

चित्र- ६३

परिभाषिकशब्दानां प्रयोगः

(प्रकारता-विशेष्यता)

(घटवद् भूतलम्)

प्रकारः (विशेषणम्) = घटः विशेष्यम् = भूतलम्

प्रकारता (निरूपितत्वम्) विशेष्यता

↓ (निरूप्यनिरूपकभावः) ↓

घटः भूतलम्

- घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यतावद् भूतलम्।
- भूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारतावान् घटः।

---

(अवच्छेदक- अवच्छिन्नत्वम्)

घटवद् भूतलम्

प्रकारता (अवच्छिन्ना) — घटत्वम् (अवच्छेदकम्) — घटः

विशेष्यता (अवच्छिन्ना) — भूतलत्वम् (अवच्छेदकम्) — भूतलम्

- प्रकारता यत्र तिष्ठति तत्र भासमानो धर्मः प्रकारताया अवच्छेदको भवति।
- विशेष्यता यत्र तिष्ठति तत्र भासमानो धर्मो विशेष्यताया अवच्छेदको भवति।

(यो धर्मो यस्यावच्छेदकः स तद्धर्मावच्छिन्नः)

- प्रकारतायाः अवच्छेदकं घटत्वम्, अतः घटत्वावच्छिन्ना प्रकारता।
- विशेष्यतायाः अवच्छेदकं भूतलत्वम्, अतः भूतलत्वावच्छिन्ना विशेष्यता।

→ घटत्वावच्छिन्नघटनिष्ठप्रकारतानिरूपित-भूतलत्वावच्छिन्नभूतलनिष्ठविशेष्यतावद् भूतलम्।

→ भूतलत्वावच्छिन्नभूतलनिष्ठविशेष्यता-निरूपितघटत्वावच्छिन्नघटनिष्ठप्रकारतावान् घटः।

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

अवच्छेदकसम्बन्धः

घटवद् भूतलम्

घटः (प्रकारः)

(संयोगः) ↓

भूतलम् (विशेष्यम्)

- प्रकारः येन सम्बन्धेन विशेष्ये तिष्ठति स सम्बन्धः प्रकारतावच्छेदकसम्बन्धः
- विशेष्यतायाः अवच्छेदकः सम्बन्धो न भवति

- घटनिष्ठप्रकारतावच्छेदकसम्बन्धः संयोगसम्बन्धः, अतः संयोगसम्बन्धावच्छिन्ना घटनिष्ठप्रकारता।

→संयोगसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठप्रकारतानिरूपित-भूतलत्वावच्छिन्नभूतलनिष्ठ-विशेष्यतावद् भूतलम्।

चित्र-६४

## कार्यता-कारणता

**कार्यः घटः / कारणम् = कपालम्**







- कार्यतावच्छेदकं घटत्वम्, घटत्वावच्छिन्ना कार्यता।
- कारणतावच्छेदकं कपालत्वम्, कपालत्वावच्छिन्ना कारणता।

## कार्यतावच्छेदकसम्बन्धः /कारणतावच्छेदकसम्बन्धः

ययोः सामानाधिकरण्यं तयोरेव कार्यकारणभावः




- कार्यतावच्छेदकसम्बन्धः समवायसम्बन्धः, समवायसम्बन्धावच्छिन्ना कार्यता।
- कारणतावच्छेदकसम्बन्धः तादात्म्यसम्बन्धः, तादात्म्यसम्बन्धावच्छिन्ना कारणता।

→ समवायसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठकार्यता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-कपालत्वावच्छिन्न-कपालनिष्ठ-कारणतावत् कपालम्।

→ तादात्म्यसम्बन्धावच्छिन्न-कपालत्वावच्छिन्न-कपालनिष्ठ-कारणतानिरूपित-समवायसम्बन्धावच्छिन्न-घटत्वावच्छिन्न-घटनिष्ठकार्यतावान् घटः।

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

**कार्यम् = ज्ञानम् / कारणम् = आत्मा**




- समवायसम्बन्धावच्छिन्न-ज्ञानत्वावच्छिन्न-ज्ञाननिष्ठ-कार्यता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-आत्मत्वावच्छिन्न-आत्मनिष्ठकारणतावान् आत्मा।

## प्रतियोगिता

चित्र-६५

घटाभाववद् भूतलम्

यस्याभावः सः प्रतियोगी

प्रतियोगी = घटः

प्रतियोगिता → (निरूपकः) → अभावः
↓
घटः

- घटनिष्ठप्रतियोगितानिरूपकाभाव-वद् भूतलम्।
- घटनिष्ठप्रतियोगिताकाभाव-वद् भूतलम्।




- येन सम्बन्धेन यन्नास्ति इति उच्यते स सम्बन्धः प्रतियोगितावच्छेदकसम्बन्धः।

घटाभावः = संयोगसम्बन्धेन घटो नास्ति

- घटनिष्ठप्रतियोगितावच्छेदकधर्मः घटत्वम्।
- घटनिष्ठप्रतियोगितावच्छेदकसम्बन्धः संयोगसम्बन्धः।

→ संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभाव-वद् भूतलम्।

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

**रूपाभाववान् वायुः (समवायसम्बन्धेन रूपं नास्ति)**

प्रतियोगी = रूपम्
प्रतियोगिता = रूपनिष्ठा
प्रतियोगितावच्छेदकम् = रूपत्वम्
प्रतियोगितावच्छेदकसम्बन्धः = समवायः

→ समवायसम्बन्धावच्छिन्नरूपत्वावच्छिन्नरूपनिष्ठप्रतियोगिताकाभाव-वान् वायुः।

---

अन्योन्याभावः

**घटो न पटः (घटभेदवान् पटः)**




- प्रतियोगितावच्छेदकम् = घटत्वम्।
- प्रतियोगितावच्छेदकसम्बन्धः=तादात्म्यम्।

भेदीयप्रतियोगितावच्छेदकसम्बन्धः तादात्म्यम् एव

→ तादात्म्यसम्बन्धावच्छिन्नघटत्वावच्छिन्नघटनिष्ठप्रतियोगिताकाभाववान् पटः।

चित्र- ६६

**परामर्शानुमित्योः कार्यकारणभावः**

**पर्वतो वह्निमान्** इति अनुमितिं प्रति **वह्निव्याप्यधूमवान् पर्वतः** इति परामर्शः कारणम्

**अनुमितिः = पर्वतो वह्निमान्**

उद्देश्यः = पर्वतः / विधेयः = वह्निः




○ विधेयतावच्छेदकसम्बन्धः संयोगः

○ संयोगसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नवह्निनिष्ठविधेयतानिरूपितपर्वतत्वावच्छिन्नपर्वतनिष्ठ-उद्देश्यताशाल्यनुमितिः।

**परामर्शः = वह्निव्याप्यधूमवान् पर्वतः**




○ **अन्तराभासमानविषयतयोः अभेदः।**

○ वह्निनिष्ठप्रकारतानिरूपित-व्याप्तिनिष्ठप्रकारता (विशेष्यता)निरूपित-धूमनिष्ठप्रकारता (विशेष्यता)- निरूपित-पर्वतनिष्ठविशेष्यताशाली परामर्शः।

○ वह्नित्वावच्छिन्नप्रकारतानिरूपितव्याप्तित्वावच्छिन्नप्रकारता(विशेष्यता)निरूपित-धूमत्वावच्छिन्नप्रकारता (विशेष्यता)-निरूपित-पर्वतत्वावच्छिन्न-विशेष्यताशाली परामर्शः।




- **अन्तराभासमानविषयतयोः अवच्छेद्यावच्छेदकभावः।**

- वह्नित्वावच्छिन्नप्रकारतानिरूपित-व्याप्तित्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारता-(प्रकारत्वावच्छिन्नविशेष्यता)-निरूपित-धूमत्वावच्छिन्न-विशेष्यत्वावच्छिन्नप्रकारता (प्रकारत्वावच्छिन्नविशेष्यता)-निरूपितपर्वतत्वावच्छिन्नविशेष्यताशाली परामर्शः। एवं रीत्या अन्यत्राप्यनुसन्धेयम्।

इति दिक्

।। श्रीकृष्णार्पणमस्तु ।।

Mod yet tra

संस्कृत यूनिवर्सिटी में modern education के साथ-साथ गुरुकुल परंपरा का भी हो रहा निर्वाह

jagran
A JAGRAN INITIATIVE

special

city

# बैठते हैं जमीन पर, पढ़ते हैं स्क्रीन पर

- जमाने में भी आया है बदलाव मगर जमीन से जुड़े हैं विचार
- पांच मार्च से चल रहा न्यायशास्त्र पर तर्क-वितर्क

# तकनीक से कठिन पाठ आसान

- न्यायशास्त्र की गूढ़ता समझाने के लिए युवा अध्यापक ने तैयार किया पॉवर प्वाइंट प्रजेंटेशन
- संस्कृत विवि के डॉ. विजयपाल शास्त्री का प्रेजेंटेशन छात्रों में है काफी लोकप्रिय

## प्रकाशिताः कृतयः-

1. न्यायप्रवेशिका
2. बालव्युत्पत्तिः
3. तर्कसङ्ग्रहसर्वस्वम् (सम्पादित)
4. माथुरी पञ्चलक्षणी (हिन्दी व्याख्या)
5. वेदान्तपरिभाषा (सम्पादित)
6. न्यायसंविद्

ISBN-978-93-5268-563-9